श्रीगणेशाय नमः ।

# श्रीअन्नपूर्णा सहस्रनाम्

अन्नपूर्णाकवच व अन्नपूर्णास्तोत्र सहित

संशोधक—

महन्त विश्वनाथपुरीजी

प्रकाशक—

गौरीशंकर गनेड़ीवाला,

छपरा ।

हितैषी प्रिंटिंग वर्क्स, बनारस ।

श्रीगणेशाय नमः

# अथ अन्नपूर्णासहस्रनाम प्रारभ्यते

कैलासशिखरासीनं देवदेवं महेश्वरं ।
प्रणम्य दंडवद्भूमौ पार्वती परिपृच्छति ॥ १ ॥

श्रीपार्वत्युवाच ।

अन्नपूर्णा महादेवी त्रैलोक्यजीवधारिणी ।
नाम्नां सहस्रं तस्यास्तु कथयस्व महाप्रभो ॥ २ ॥

श्रीशिव उवाच ।

शृणु देवि वरारोहे जगत्कारिणि कौलिनि ।
आराधिता च सर्वेषां सर्वं त्वं परियच्छसि ॥ ३ ॥

सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्यप्राणिपूजितैः ।
अन्नदायास्स्तवंदिव्यं यत्सुरैरपि वांछितम् ॥ ४ ॥
कथयामि तव स्नेहात्सावधानावधारय ।
गोपनीयं प्रयत्नेन स्तवराजमिदं शुभम् ॥ ५ ॥
न प्रकाश्यं त्वया भद्रे दुर्जनेभ्यो विशेषतः ।
न देयं परशिष्येभ्यो भक्तिहीनाय पार्वति ॥ ६ ॥
देयं शिष्याय शांताय गुरुदेवरताय च ।
अन्नपूर्णास्तवं देयं कौलिकाय कुलेश्वरि ॥ ७ ॥

ॐ अस्य श्रीमन्महाश्रीअन्नपूर्णासहस्रनाम-स्तोत्रमालामंत्रस्य श्रीभगवान् सदाशिवऋषिरनुष्टुप् छंदः प्रकटगुप्तगुप्ततरसंप्रदायकुलोत्तीर्णनिगर्भरहस्याऽतिपूर्वरहस्याचिंत्यप्रभावा भगवती श्रीमन्महाश्री अन्नपूर्णा देवता हलो वीजं स्वराः शक्तिः जीवो वीजं बुद्धिः शक्तिः उदानो वीजं सुषुम्ना नाडी सरस्वती शक्तिः धर्मार्थकाममोक्षार्थेषु पाठे जपे विनियोगः ॥ ८ ॥

ध्यानम् ।

अर्कोन्मुक्तशशांककोटिवदनामापीनतुंगस्तनीम् ।
चंद्रार्द्धांकितमस्तकां मधुमदामालोलनेत्रत्रयीम् ॥
विश्वाणामनि शंकरे जपवटीं शूलं कपालं करै-
राद्यांयौवनगर्विंतां लिपितनुं वागीश्वरीमाश्रये ॥६॥

ॐ अन्नपूर्णायै नमः ।

अन्नपूर्णा अन्नधात्री अन्नराशिकृतालया ।
अन्नदा अन्नरूपा च अन्नदानरता सदा ॥ १ ॥
अनंता च अनंताक्षी अनंतगुणशालिनी ।
अच्युता अच्युतप्राणा अच्युतानंदकारिणी ॥ २ ॥
अव्यक्तानंतमहिमा अनंतस्य कुलेश्वरी ।
अब्धिस्था अब्धिशयना अब्धिजा अब्धिनंदिनी ॥३॥
अब्जस्था अब्जनिलया अब्जजा अब्जभूषणा ।
अब्जाभा अब्जहस्ता च अब्जपत्रशुभेक्षणा ॥४॥
अब्जानना अनंतात्मा अग्निस्था अग्निरूपिणी ।
अग्निजाया अग्निमुखी अग्निकुंडकृतालया ॥५॥

अकारा अग्निमाता च अजयाऽदितिनंदिनी ।
आद्या आदित्यसंकाशा आत्मज्ञा आत्मगोचरा॥ ६ ॥
आत्मसूः आत्मदयिता आधारा आत्मरूपिणी ।
आशा आकाशपद्मस्था अवकाशस्वरूपिणी ॥ ७ ॥
आशापुरी अगाधा च अणिमादिसुसेविता ।
अंबिका अबला अम्बा अनाद्या च अयोनिजा ॥ ८ ॥
अनीशा ईशिका ईशा ईशानी ईश्वरप्रिया ।
ईश्वरी ईश्वरप्राणा ईश्वरानंददायिनी ॥ ९ ॥
इंद्राणी इंद्रदयिता इंद्रसूः इंद्रपालिनी ।
इंदिरा इंद्रभगिनी इंद्रिया इंदुभूषणा ॥ १० ॥
इंदुमाता इंदुमुखी इंद्रियाणांवशंकरी ।
उमा उमापतेः प्राणा उद्यानपीठवासिनी ॥ ११ ॥
उत्तराज्ञा उत्तराख्या उकारा उत्तरात्मिका ।
ऋमाता ऋभवा ऋस्था ऋलृकारस्वरूपिणी ॥ १२ ॥
ऋकारा च लृकारा च लृतकप्रीतिदायिनी ।
एका च एकवीरा च एकारैकाररूपिणी ॥ १३ ॥

उकारा ओघरूपा च ओघत्रयसुपूजिता ।
ओघस्था ओघसंभूता ओघधात्री च ओघसूः ॥१४॥
षोडशस्वरसंभूता षोडशस्वररूपिणी ।
वर्णात्मा वर्णनिलया शूलिनी वर्णमालिनी ॥१५॥
कालरात्रिर्महारात्रिर्मोहरात्रिः सुलोचना ।
काली कपालिनी कृत्या कालिका सिंहगामिनी ॥१६॥
कात्यायनी कलाधारा कालदैत्यनिकृंतनी ।
कामिनी कामवंद्या च कमनीया विनोदिनी ॥१७॥
कामसूः कामवनिता कामधूः कमलावती ।
कामधात्री कराली च कामकेलिविनोदिनी ॥१८॥
कामना कामदा काम्या कमला कमलार्चिता ।
काश्मीरलिप्तवक्षोजा काश्मीरद्रवचर्चिता ॥१९॥
कनका कनकप्राणा कनकाचलवासिनी ।
कनकाभा काननस्था कामाख्या कनकप्रदा ॥२०॥
कामपीठस्थिता नित्या कामधामनिवासिनी ।
कंबुकंठी करालाक्षी किशोरी च कलापिनी ॥२१॥

कला काष्ठा निमेषा च कालस्था कालरूपिणी ।
कालज्ञा कालमाता च कालधात्री कलावती ॥ २२ ॥
कालदा कालहा कुल्या कुरुकुल्या कुलांगना ।
कीर्तिदा कीर्तिहा कीर्तिः कीर्तिस्था कीर्तिवर्धिनी ॥२३
कीर्तिज्ञा कीर्तितपदा कीर्तिका केशवप्रिया ।
केशिहा केलिकारी च केशवानंदकारिणी ॥२४॥
कुमुदाभा कुमारी च कर्मदा कमलेक्षणा ।
कौमुदी कुमुदानंदा कौलिकी च कुमुद्वती ॥२५॥
कोदंडधारिणी क्रोधा कूटस्था कोटराश्रया ।
कलकंठी करालांगी कालाङ्गी कालभूषणा ॥ २६ ॥
कंकाली कामदामा च कंकालकृतभूषणा ।
कपालकर्तृककरा करवीरस्वरूपिणी ॥ २७ ॥
कपर्दिनी कोमलांगी कृपासिंधुः कृपामयी ।
कुशावती कुंडसंस्था कौबेरी कौशिकी तथा ॥२८॥
काश्यपी कद्रुतनया कलिकल्मषनाशिनी ।
कंजज्ञा कंजवदना कंजकिंजल्कचर्चिता ॥२९॥

कंजाभा कंजमध्यस्था कंजनेत्रा कचोद्भवा ।
कामरूपा च ह्रींकारी कश्यपान्वयवर्द्धिनी ॥३०॥
खर्वा च खंजनद्वंद्वलोचना खर्ववाहिनी ।
खड्गिनी खड्गहस्ता च खेचरी खड्गरूपिणी ॥३१॥
खगस्था खगरूपा च खगगा खगसंभवा ।
खगधात्री खगानंदा खगयोनिस्वरूपिणी ॥३२॥
खगेशी खेटककरा खगानंदविवर्द्धिनी ।
खगमान्या खगाधारा खगगर्वविमोचिनी ॥३३॥
गंगा गोदावरी गीतिर्गायत्री गगनालया ।
गीर्वाणसुंदरी गाश्च गाथा गीर्वाणपूजिता ॥ ३४ ॥
गीर्वाणार्चितपदा गांधारी गोमती तथा ।
गर्विणी गर्वहंत्री च गर्भस्था गर्भधारिणी ॥ ३५ ॥
गर्भदा गर्भहंत्री च गंधर्वकुलपूजिता ।
गया गौरी च गिरिजा गिरिस्था गिरिसंभवा ॥३६॥
गिरिगह्वरमध्यस्था कुंजरेश्वरगामिनी ।
किरीटिनी च गदिनी गुंजाहारविभूषणा ॥ ३७ ॥

गणपा गणका गुणया गुणाकानंदकारिणी ।
गणपूज्या च गीर्वाणा गणपानंदवर्द्धिनी ॥ ३८ ॥
गुरुमाता गुरुरता गुरुभक्तिपरायणा ।
गोत्रा गौः कृष्णभगिनी कृष्णसूः कृष्णनंदिनी ॥३९॥
गोवर्द्धनी गोत्रधरा गोवर्द्धनकृतालया ।
गोवर्द्धनधरा गोदा गौरांगी गौतमात्मजा ॥ ४० ॥
घर्घरा घोररूपा च घोरा घर्घरनादिनी ।
श्यामा घनरवा घोरा घनघोरार्तिनाशिनी ॥ ४१ ॥
घनस्था च घनानंदा दारिद्र्यघननाशिनी ।
चित्तज्ञा चिंतितपदा चित्तस्था चित्तरूपिणी ॥४२॥
चक्रिणी चारुचंपाभा चारुचंपकमालिनी ।
चन्द्रिका चन्द्रकांतिश्च चाँपिनी चंद्रशेखरा ॥४३॥
चंडिका चंडदैत्यघ्नी चंद्रशेखरवल्लभा ।
चांडालिनी च चामुंडा चंडमुंडवधोद्यता ॥ ४४ ॥
चैतन्या भैरवी चंडा चैतन्यघनगेहिनी ।
चित्स्वरूपा चिदाधारा चंडवेगा चिदालया ॥४५॥

चन्द्रमण्डलमध्यस्था चन्द्रकोटिसुशीतला ।
चपला चन्द्रभगिनी चन्द्रकोटिनिभानना ॥४६॥
चिंतामणिगुणाधारा चिंतामणिविभूषणा ।
भक्तचिंतामणिलता चिंतामणिकृतालया ॥ ४७ ॥
चारुचन्दनलिप्तांगी चतुरा च चतुर्मुखी ।
चैतन्यदा चिदानन्दा चारुचामरवीजिता ॥ ४८ ॥
छत्रदा छत्रधारी च छलछद्मविनाशिनी ।
छत्रहा छत्ररूपा च छत्रछायाकृतालया ॥ ४९ ॥
जगज्जीवा जगद्धात्री जगदानन्दकारिणी ।
यज्ञप्रिया यज्ञरता जपयज्ञपरायणा । ५० ॥
जननी जानकी यज्वा यज्ञहा यज्ञनन्दिनी ।
यज्ञदा यज्ञफलदा यज्ञस्थानकृतालया ॥ ५१ ॥
यज्ञभोक्त्री यज्ञरूपा यज्ञविघ्नविनाशिनी ।
जपाकुसुमसंकाशा जपाकुसुमशोभिता ॥ ५२ ॥
जालंधरी जया जैत्री जीमूतचयभाषिणी ।
जयदा जयरूपा च जयस्था जयकारिणी ॥ ५३ ॥

जगदीशप्रिया जीवा जलस्था जलजेक्षणा ।
जलरूपा जह्नुकन्या यमुना जलजोदरी ॥५४॥
जलजास्या जाह्नवी च जलजाभा जलोदरी ।
यदुवंशोद्भवा जीवा यादवानंदकारिणी ॥५५॥
यशोदा यशसां राशिः यशोदानंदकारिणी ।
ज्वलिनी ज्वालिनी ज्वाला ज्वलत्पावकसंनिभा ५६॥
ज्वालामुखी जगन्माता यमलार्जुनभंजिका ।
जन्मदा जन्महा जन्या जन्मभूर्जनकात्मजा ॥५७॥
जनानंदा जांबवती जंबूद्वीपकृतालया ।
जांबूनदसमानाभा जांबूनदविभूषणा ॥ ५८ ॥
जंभहा जातिदा जातिर्ज्ञानदा ज्ञानगोचरा ।
ज्ञानहा ज्ञानरूपा च ज्ञानविज्ञानशालिनी ॥५९॥
जिनजैत्री जिनाधारा जिनमाता जिनेश्वरी ।
जितेन्द्रिया जनाधारा अजिनांबरधारिणी ॥६०॥
शंभुकोटिदुराधर्षा विष्णुकोटिविमर्दिनी ।
समुद्रकोटिगंभीरा वायुकोटिमहाबला ॥६१॥

सूर्यकोटिप्रतीकाशा यमकोटिदुरापहा ।
कामधुक् कोटिफलदा शक्रकोटिसुराज्यदा ॥६२॥
कंदर्पकोटिलावण्या पद्मकोटिनिभानना ।
पृथ्वीकोटिजनाधारा अग्निकोटिभयंकरी ॥६३॥
अणिमा महिमा प्राप्तिः गरिमा लघिमा तथा ।
प्राकाम्यदा वशकरी इशिका सिद्धिदा तथा ॥६४॥
महिमादिगुणोपेता अणिमाद्यष्टसिद्धिदा ।
जवनघ्नी जनाधीना जामिनी च जरापहा ॥६५॥
तारिणी तारिका तारा तोतला तुलसीप्रिया ।
तंत्रिणी तंत्ररूपा च तंत्रज्ञा तंत्रधारिणी ॥ ६६ ॥
तारहारा च तुलजा डाकिनी तंत्रगोचरा ।
त्रिपुरा त्रिदशा त्रिस्था त्रिपुरासुरघातिनी ॥६७॥
त्रिगुणा च त्रिकोणस्था त्रिमात्रा त्रितनुस्थिता ।
त्रैविद्या च त्रयी त्रिघ्नी तुरीया त्रिपुरेश्वरी ॥६८॥
त्रिकोदरस्था त्रिविद्या त्रैलोक्या त्रिपुरात्मिका ।
त्रिधाम्नी त्रिदशाराध्या त्र्यक्षा त्रिपुरवासिनी ॥६९॥

त्रिवर्णा त्रिपदी तारा त्रिमूर्तिर्जननी त्वरा ।
त्रिदिवा त्रिदिवेशादिदेवी त्रैलोक्यधारिणी ॥७०॥
त्रिमूर्तिश्च त्रिजननी त्रिभूः त्रिपुरसुंदरी ।
तपस्विनी तपोनिष्ठा तरुणी ताररूपिणी ॥७१॥
तामसी तापसी चैव तापघ्नी च तमोपहा ।
तरुणार्कप्रतीकाशा तप्तकांचनसन्निभा ॥ ७२ ॥
उन्मादिनी तंतुरूपा त्रैलोक्यव्यापिकेश्वरी ।
तार्किकी तर्किकी विद्या तापत्रयविनाशिनी ॥७३॥
त्रिपुष्करा त्रिकालज्ञा त्रिसंध्या च त्रिलोचना ।
त्रिवर्गा च त्रिवर्गस्था तपसः सिद्धिदायिनी ॥७४॥
अधोक्षजा अयोध्या च अपर्णा च अवंतिका ।
कारिका तीर्थरूपा च तीर्था तीर्थकरी तथा ॥७५॥
दारिद्र्यदुःखदलिनी अदीना दीनवत्सला ।
दिननाथप्रिया दीर्घा दयापूर्णा दयात्मिका ॥७६॥
देवदानवसंपूज्या देवानां प्रियकारिणी ।
दक्षपुत्री दक्षमाता दक्षयज्ञविनाशिनी ॥७७॥

देवसूः दक्षिणा दक्षा दुर्गा दुर्गार्तिनाशिनी ।
देवकीगर्भसंभूता दुर्गदैत्यविनाशिनी ॥७८॥
अट्टाट्टहासिनी दोला दोलाकर्माभिनंदिनी ।
देवकी देविका देवी दुरितघ्नी तडित्तथा ॥७९॥
गंडकी गल्लकी शिप्रा द्वारका द्वारवती तथा ।
आनंदोदधिमध्यस्था कटिसूत्रैरलंकृता ॥८०॥
घोराग्निदाहदमिनी दुःखदुःस्वप्ननाशिनी ।
श्रीमयी श्रीमती श्रेष्ठा श्रीकरी श्रीविभाविनी ॥८१॥
श्रीदा श्रीभा श्रीनिवासा श्रीमती श्रीमतांगतिः ।
धनदा दामिनी दांता धर्मदा धनशालिनी ॥८२॥
दाडिमीपुष्पसंकाशा धनागारा धनंजयी ।
धूम्राभा धूम्रदैत्यघ्नी धवला धवलप्रिया ॥८३॥
धूम्रवक्त्रा धूम्रनेत्रा धूम्रकेशी च धूसरा ।
धरणी धारणी धैर्या धरा धात्री च धैर्यदा ॥८४॥
दमिनी धर्मिणी धूश्च दयादोग्ध्री दुरासहा ।
नारायणी नारसिंही नृसिंहहृदयालया ॥८५॥

नागिनी नागकन्या च नागसूः नागनायिका ।
नानारत्नविचित्रांगी नानाभरणमंडिता ॥८६॥
दुर्गस्था दुर्गरूपा च दुःखदुष्कृतनाशिनी ।
ह्रींकारी चैव श्रींकारी हूंकारी क्लेशनाशिनी ॥८७॥
नगात्मजा नागरी च नवीना नूतनप्रिया ।
नीरजस्था नीरदाभा नवलावण्यसुंदरी ॥८८॥
नीतिज्ञा नीतिदा नीतिः निम्ननाभी नगेश्वरी ।
निष्ठा नित्या निरातंका नागयज्ञोपवीतिनी ॥८९॥
निधिदा निधिरूपा च निर्गुणा नरवाहिनी ।
नरमांसरता नारी नरमुंडविभूषणा ॥ ९० ॥
निराधारा निर्विकारा नुतिर्निर्वाणसुंदरी ।
नरासृक्पानमत्ता च निर्वैरा नागगामिनी ॥९१॥
परमा रमिता प्राज्ञा पार्वती पर्वतात्मजा ।
पर्वप्रिया पर्वरता पर्वपावनपावनी ॥ ९२ ॥
परात्परतरा पूर्वा पश्चिमा पापनाशिनी ।
पशूनांपतिपत्नी च पतिभक्तिपरायणा ॥९३॥

परेशी पारगा पारा परंज्योतिःस्वरूपिणी ।
निष्ठुरा क्रूरहृदया परा सिद्धिः परा गतिः ॥६४॥
पशुघ्नी पशुरूपा च पशुहा पशुवाहिनी ।
पिता माता च यंत्री च पशुपाशविनाशिनी ॥६५॥
पद्मिनी पद्महस्ता च पद्मकिंजल्कवासिनी ।
पद्मवक्त्रा च पद्माक्षी पद्मस्था पद्मसंभवा ॥६६॥
पद्मास्या पंचमी पूर्णा पूर्णपीठनिवासिनी ।
पद्मरागप्रतीकाशा पांचाली पंचमप्रिया ॥६७॥
परब्रह्मस्वरूपा च परब्रह्मनिवासिनी ।
परमानंदमुदिता परचक्रविनाशिनी ॥६८॥
परेशी परमा पृथ्वी पीनतुंगपयोधरा ।
पराविद्या परावरा परमानंददायनी ॥ ६६ ॥
प्रजा प्रजावती पुष्टिः पिनाकिपरिकीर्तिता ।
प्राणहा प्राणरूपा च प्राणदा च प्रियंवदा ॥ १०० ॥
फणिभूषा फणावेशी फकारकंठमालिनी ।
फणिराट्कृतसर्वांगी फणिभोगनिवासिनी ॥ १ ॥

बलभद्रस्य भगिनी बाला बालप्रदायिनी ।
फल्गुरूपा प्रलंबघ्नी फल्गूत्सवविनोदिनी ॥ २ ॥
भवानी भवपत्नी च भवभीतिहरा भवा ।
भवेश्वरी भवाराध्या भवेशी भवनायिका ॥ ३ ॥
भवमाता भवागम्या भवकंटकनाशिनी ।
भवप्रिया भवानंदा भव्या च भवमोचिनी ॥ ४ ॥
भावनीया भगवती भवभारविनाशिनी ।
भूतधात्री च भूतेशी भूतस्था भूतरूपिणी ॥ ५ ॥
भूतमाता च भूतघ्नी भूतपंचकवासिनी ।
भोगोपचारकुशला भिक्षादात्री च भूचरी ॥ ६ ॥
भीतिघ्नी भक्तिगम्या च भक्तानामार्तिनाशिनी ।
भक्तानुकंपिनी भीमा भगिनी भगनायिका ॥ ७ ॥
भगविद्या भगक्लिन्ना भगयोनिर्भगप्रदा ।
भगेशी भगरूपा च भगगुह्या भगावहा ॥ ८ ॥
भगोदरी भगानंदा भगाढ्या भगमालिनी ।
भोगप्रदा भोगवासा भोगमूला च भोगिनी ॥ ९ ॥

भेरुंडा भेदिनी भीमा भद्रकाली भिदोज्झिता ।
भैरवी भुवनेशानी भुवना भुवनेश्वरी ॥ १० ॥
भीमाक्षी भारती चैव भैरवाष्टकसेविता ।
भास्वरा भास्वती भीतिः भास्वदुत्तानशालिनी ॥११॥
भागीरथी भोगवती भवघ्नी भुवनात्मिका ।
भूतिदा भूतिरूपा च भूतस्था भूतवर्द्धिनी ॥ १२ ॥
माहेश्वरी महामाया महातेजा महासुरी ।
महाजिह्वा महालोला महादंष्ट्रा महाभुजा ॥१३॥
महामोहांधकारघ्नी महामोक्षप्रदायिनी ।
महादारिद्र्यशमनी महाशत्रुविमर्दिनी ॥ १४ ॥
महाशक्तिर्महाज्योतिर्महासुरविमर्दिनी ।
महाकाया महावीर्या महापातकनाशिनी ॥ १५ ॥
महारवा मंत्रमयी मणिपूरनिवासिनी ।
मानसी मानदा मान्या मनश्चक्षुरगोचरा ॥ १६ ॥
माहेंद्री मथुरा माया महिषासुरमर्दिनी ।
महाकुंडलिनी शक्तिर्महाविभववर्द्धिनी ॥१७॥

मानसी माधवी मेधा मतिदा मतिधारिणी ।
मेनकागर्भसंभूता मेनकाभगिनी मतिः ॥ १८ ॥
महोदरी मुक्तकेशी मुक्तिकाम्यार्थसिद्धिदा ।
माहेशी महिषारूढा मधुदैत्यविमर्दिनी ॥ १९ ॥
महाव्रता महामूर्द्धा महाभयविनाशिनी ।
मातंगी मत्तमातंगी मातंगकुलमंडिता ॥ २० ॥
महाघोरा माननीया मत्तमातंगगामिनी ।
मुक्ताहारलतोपेता मदाघूर्णितलोचना ॥ २१ ॥
महापराधराशिघ्नी महाचौरभयापहा ।
महाचिंत्यस्वरूपा च मणिमंत्र महौषधी ॥ २२ ॥
मणिमंडपमध्यस्था मणिमालाविराजिता ।
मंत्रात्मिका मंत्रगम्या मंत्रमाता सुमंत्रिणी ॥२३॥
मेरुमंदिरमध्यस्था मकराकृतिकुंडला ।
मंथरा च महासूक्ष्मा महादूती महेश्वरी ॥ २४ ॥
मालिनी मानवी माध्वी मदरूपा मदोत्कटा ।
मदिरा मधुरा चैव मोदिनी च महोद्धता ॥ २५

मंगला च मधुमयी मधुपानपरायणा ।
मनोरमा रमामाता राजराजेश्वरी रमा ॥ २६ ॥
राजमान्या राजपूज्या रक्तोत्पलविभूषणा ।
राजीवलोचना रामा राधिका रामवल्लभा ॥ २७ ॥
शाकिनी डाकिनी चैव लावण्यांबुधिवीचिका ।
रुद्राणी रुद्ररूपा च रौद्री रुद्रार्तिनाशिनी ॥ २८ ॥
रक्तप्रिया रक्तवस्त्रा रक्ताक्षी रक्तलोचना ।
रक्तकेशी रक्तदंष्ट्रा रक्तचंदनचर्चिता ॥ २९ ॥
रक्तांगी रक्तभूषा च रक्तबीजनिपातिनी ।
रागादिदोषरहिता रतिजा रतिदायिनी ॥ ३० ॥
विश्वेश्वरी विशालाक्षी विंध्यपीठनिवासिनी ।
विश्वभूर्वीरविद्या च वीरसूर्वीरनंदिनी ॥ ३१ ॥
वीरेश्वरी विशालाक्षी विष्णुमायाविमोहिनी ।
विद्या विष्णुस्वरूपा च विशालनयनोत्पला ॥३२॥
विष्णुमाता च विश्वात्मा विष्णुजायास्वरूपिणी ।
ब्रह्मेशी ब्रह्मदा ब्राह्मी ब्रह्माणी ब्रह्मरूपिणी ॥३३ ॥

द्वारका विश्ववंद्या च विश्वपाशविमोचिनी ।
विश्वासकारिणी विश्वा विश्वशक्तिर्विचक्षणा ॥३४॥
बाणचापधरा वीरा बिन्दुस्था बिन्दुमालिनी ।
षट्चक्रभेदिनी षोडा षोडशारनिवासिनी ॥ ३५ ॥
शितिकण्ठप्रिया शांता शाकिनी शान्तरूपिणी ।
शाश्वती शंभुवनिता शांभवी शिवरूपिणी ॥ ३६ ॥
शिवमाता च शिवदा शिवा शिवहृदासना ।
शुक्लांबरा शीतला च शीला शीलप्रदायिनी ॥ ३७ ॥
शिशुप्रिया वैद्यविद्या शालिग्रामशिला शुचिः ।
हरिप्रिया हरेर्मूर्तिर्हरिनेत्रकृतालया ॥ ३८ ॥
हरिवक्त्रोद्भवा हाला हरिवक्षःस्थलस्थिता ।
क्षेमंकरी क्षितिक्षेत्रा क्षुधितस्यप्रपूरणी ॥ ३९ ॥
वैश्या च क्षत्रिया शूद्री क्षत्रियाणांकुलेश्वरी ॥४०॥
हरपत्नी हराराध्या हरसूर्हररूपिणी ।
सर्वानंदमयी सिद्धिः सर्वरक्षास्वरूपिणी ॥ ४१ ॥

सर्वदुष्टप्रशमनी सर्वेप्सितफलप्रदा ।
सर्वसिद्धीश्वराराध्या सर्वमंगलमंगला ॥ ४२ ॥ १००८

पुण्यं सहस्रनामेदं तव प्रीत्या प्रकाशितम् ।
गोपनीयं प्रयत्नेन पठनीयं प्रयत्नतः ॥ ४३ ॥

नातः परतरं पुण्यं नातः परतरं तपः ।
नातः परतरं स्तोत्रं नातः परतरा गतिः ॥ ४४ ॥

स्तोत्रं नाम सहस्राख्यं मम वक्त्राद्विनिर्गतम् ।
यः पठेत्परया भक्त्या शृणुयाद्वा समाहितः ॥ ४५ ॥

मोक्षार्थी लभते मोक्षं स्वर्गार्थी स्वर्गमाप्नुयात् ।
कामार्थी लभते कामं धनार्थी लभते धनम् ॥ ४६ ॥

विद्यार्थी लभते विद्यां यशोऽर्थी लभते यशः ।
कन्यार्थी लभते कन्यां सुतार्थी लभते सुतम् ॥४७॥

मूर्खोपि लभते शास्त्रं चौरोपि लभते गतिम् ।
गुर्विणी जनयेत्पुत्रं कन्या विंदति सत्पतिम् ॥४८॥

संक्रांत्यां च चतुर्दश्यामष्टम्यां च विशेषतः ।
पौर्णमास्याममावास्यां नवम्यां भौमवासरे ॥ ४९ ॥

पठेद्वा पाठयेद्वापि पूजयेद्वापि पुस्तकम् ।
स मुक्तः सर्वपापेभ्यः कामेश्वरसमो भवेत् ॥५०॥
लक्ष्मीवान् सुतवाँश्चैव वल्लभः सर्वयोषिताम् ।
तस्य वश्यं भवेदाशु त्रैलोक्यं सचराचरम् ॥५१॥
विद्यानां पारगो विप्रः क्षत्रियो विजयी रणे ।
वैश्योधनसमृद्धः स्यात् शूद्रः सुखमवाप्नुयात् ॥५२॥
क्षेत्रे च वहुसस्यंस्याद्गावश्च बहुदुग्धदाः ।
नाशुभं नापदस्तस्य न भयं नृपशत्रुतः ॥ ५३ ॥
जायते नाशुभा बुद्धिः लभते कुलपूज्यताम् ।
न बाधन्ते ग्रहास्तस्य न रक्षांसि न पन्नगाः ॥५४॥
न पिशाचा न डाकिन्यो भूतवेतालडंभकाः ।
बालग्रहाभिभूतानां बालानां शांतिकारकम् ॥ ५५ ॥
द्विषतां प्रीतिभेदे च मैत्रीकरणमुत्तमम् ।
लोहपाशैर्दृढैर्बद्धो वंदी वेश्मनि दुर्गमे ॥ ५६ ॥
तिष्ठन् शृण्वन् पठन् मर्त्यो मुच्यते नात्र संशयः ।
पश्यंति न हि ते शोकं वियोगं चिरजीविनः ॥५७॥

र्णीती बद्धगर्भा च सुखं सैव प्रसूयते ।
कथा पठनादेव सर्वपापक्षयो भवेत् ॥ ५८ ॥
श्यंति महतो रोगा दशधावर्त्तनेन च ।
तथा वर्त्तने चैव वाचां सिद्धिः प्रजायते ॥ ५९ ॥
वरात्रौ जिताहारो दृढबुद्धिर्जितेंद्रियः ।
ंबिकायतने विद्वान् शुचिष्मान्मूर्तिसंनिधौ ॥ ६० ॥
काकी च दशावर्तं पठन् धीरश्च निर्भयः ।
ाक्षाद्भगवती तस्मै प्रयच्छेदीप्सितं फलम् ॥६१॥
िद्धपीठे गिरौ रम्ये सिद्धक्षेत्रे सुरालये ।
ठनात्साधकस्याशु सिद्धिर्भवति वांछिता ॥ ६२ ॥
शावर्तंपठेन्नित्यं भूमिशायी नरः शुचिः ।
वप्ने मूर्तिमयीं देवीं वरदां सोऽपि पश्यति ॥६३॥
ावर्त्तनसहस्रैर्ये जपंति पुरुषोत्तमाः ।
सिद्धाः सिद्धिदा लोके शापानुग्रहणेक्षमाः ॥६४॥
ायच्छंत्तस्य सर्वस्वं सेवंते तान् महीश्वराः ।
भूर्जपत्रेष्टगंधेन लिखित्वा तु शुभे दिने ॥ ६५ ॥

धारयेत् यंत्रितं शीर्षे पूजयित्वा कुमारिकाम् ।
ब्राह्मणान् वरनारींश्च धूपैः कुसुमचन्दनैः ॥ ६६ ॥
क्षीरखण्डादिभोज्यांश्च भोजयित्वा सुभक्तितः ।
बध्नंति ये महारक्षां बालानां च विशेषतः ॥६७॥
रुद्रं दृष्ट्वा यथा देवं विष्णुं दृष्ट्वा च दानवाः ।
पन्नगा गरुडं दृष्ट्वा सिंहं दृष्ट्वा यथा गजाः ॥ ६८ ॥
मंडूका भोगिनं दृष्ट्वा मार्जारं मूषकास्तथा ।
विघ्नभूताः पलायन्ते तस्य वक्त्रविलोकनात् ॥६९
अग्निचौरभयं तस्य कदाचिन्नैव संभवेत् ।
पातकान् विविधान्सोपि मेरुमंदरसन्निभान् ॥७०॥
भस्मसात् कुरुते क्षिप्रं तृणं वह्निहुतं यथा ।
नृपाश्च वैश्यतां यांति नृपपूज्याश्च ते नराः ॥७१॥
महार्णवे महानद्यां पोतस्थे च न भीः क्वचित् ।
रणे द्यूते विवादे च विजयं प्राप्नुवंति ते ॥७२॥
सर्वत्र पूजितो लोकैर्बहुमानपुरःसरैः ।
रतिरागविवृद्धाश्च विह्वलाः कामापीडिताः ॥ ७३ ॥

यौवनाक्रांतदेहांस्तान् श्रयंते वामलोचनाः ।
सहस्रं जपते यस्तु खेचरो जायते नरः ॥ ७४ ॥
सहस्रदशकं देवि यः पठेद्भक्तिमान्नरः ।
सा तस्य जगतां धात्री प्रत्यक्षा भवति ध्रुवम् ॥७५॥
लक्षं पूर्णं यदा देवि स्तोत्रराजं जपेत्सुधीः ।
भवपाशविनिर्मुक्तो मम तुल्यो न संशयः ॥७६॥
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ।
सर्वधर्मेषु धर्मेषु सर्वदानेषु यत्फलम् ॥ ७७ ॥
सर्ववेदेषु प्रोक्तेषु यत्फलं परिकीर्तितम् ।
तत्पुण्यं कोटिगुणितं सकृज्जप्त्वा लभेन्नरः ॥७८॥
देहांते परमं स्थानं यत्सुरैरपि दुर्लभं ।
प्राप्नोति न संदेहः स्तवराजस्य कीर्तनात् ॥७९॥

इति श्रीरुद्रयामले उत्तरखण्डे भवानीश्वरसंवादे
अन्नपूर्णासहस्रनाम समाप्तम् ।

श्री गणेशाय नमः ।

श्री अन्नपूर्णा देव्यै नमः

# अथान्नपूर्णा कवचं प्रारभ्यते

ॐ ऐं ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा ॥

ॐ क्लीं श्रीं ह्रीं ऐं ॐ ॥

द्वात्रिंशद्वर्णो मन्त्रोऽयं शङ्कर प्रतिभाषितः ।
अन्नपूर्णा महाविद्या सर्वमन्त्रोत्तमोत्तमा ॥ १ ॥
पूर्वमुत्तरमुच्चार्य्य सम्पुटी करणमुत्तमम् ।
स्तोत्र मन्त्रस्य ऋषिर्ब्रह्माछन्दोत्रिष्टुवुदाहृतः ॥ २ ॥
देवताऽऽन्नपूर्णा च ह्रीं बीज मम्बिकास्मृता ।
स्वाहा शक्तिरितिज्ञेयं भगवति कीलकंमतम् ॥ ३ ॥
धर्मार्थ काम मोक्षेषु विनियोग उदाहृतः ॥

अथ मन्त्रः ।

ॐ ह्रीं भगवति माहेश्वरि अन्नपूर्णायै स्वाहा ।

सप्तार्णवमनुष्याणां जप मन्त्रः समाहितः ॥ ४ ॥
अन्नपूर्णे इमं मन्त्रं मनुसप्तदशाक्षरम् ॥
सर्वसम्पत्प्रदो नित्यं सर्व विश्वकरी तथा ॥ ५ ॥
भुवनेश्वरीति विख्यातासर्वाभीष्टं प्रयच्छति ।
हृल्लेखेयमितिज्ञेय मोङ्काराक्षररूपिणी ॥ ६ ॥
कान्ति पुष्टिधनारोग्यं यशांसिलभतेश्रियम् ।
अस्मिन्मन्त्रेरतो नित्यं वशयेदखिलं जगत् ॥ ७ ॥

अथाङ्गन्यासः ।

ॐ अस्यश्री अन्नपूर्णा स्तोत्र माला मन्त्रस्य ब्रह्मा ऋषये नमः शिरसि । ॐ त्रिष्टुप्छन्दसे नमः मुखे ॥ ॐ अन्नपूर्णा देवतायै नमः हृदये । ॐ ह्रीं बीजाय नमः नाभौ । ॐ स्वाहा शक्तये नमः पादयोः । ॐ धर्म्मार्थ काम मोक्षेषु विनियोगाय नमः सर्वांगें ॥

अथ करन्यासः ।

ॐ ह्रां अङ्गुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां

नमः ॥ ॐ ह्रूं मध्यमाभ्यां नमः । ॐ ह्रैं अनामिकाभ्यां नमः ॥ ॐ ह्रौं कनिष्ठिकाभ्यां नमः ॐ ह्रः करतल करपृष्ठाभ्यां नमः ।

अथ हृदयादि न्यासः ।

ॐ ह्रां हृदयाय नमः । ॐ ह्रीं शिरसे स्वाहा । ह्रूं शिखायै बषट् ॥ ॐ ह्रैं कवचाय हुम् । ॐ ह्रौं नेत्रत्रयाय बौषट् । ॐ ह्रः अस्त्राय फट् ॥

अथ ध्यानम् ।

ॐ रक्तां विचित्र वसनां नवचन्द्रचूडा मन्न-प्रदान निरतां स्तनभारनम्राम् । नृत्यन्तामिन्दुसकला भरणांविलोक्य हृष्टां भजे भगवतीं भवदुःख-हन्त्रीम् ॥ १ ॥

अथ मन्त्रः ।

ॐ ऐं ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे ममाभिलषित मन्त्रं देहि स्वाहा ॥ ॐ ऐं ह्रीं श्रीं क्लीं मन्दार कल्प हरि चन्दन पारिजात

मध्ये शशाङ्क मणिमण्डित वेदिसंस्थे। अर्धेन्दु मौलिसुललाट षडर्ध नेत्रे भिक्षां प्रदेहि गिरिजेक्षुधितायमह्यम् क्लीं श्रीं ह्रीं ऐं ॐ ॥ १ ॥ ॐ ऐं ह्रीं श्रीं क्लीं केयूरहार कठकाङ्गद कर्णपूरेकाञ्ची कलापमणि कान्तिलसद्दुकूले। दुग्धान्नपात्र वरकाञ्चन दर्विहस्ते भिक्षांप्रदेहि० क्लीं श्रीं ह्रीं ऐं ॐ ॥ २ ॥ ॐ ऐं ह्रीं श्रीं क्लीं आलीकदम्ब परिसेवित पार्श्वभागे शक्रादिभिर्मुकुलिताञ्जलिभिः पुरस्तात्। देवि त्वदीय चरणौ शरणांप्रपद्ये भिक्षांप्रदे० क्लीं श्रीं ह्रीं ऐं ॐ ॥ ३ ॥ ॐ ऐं ह्रीं श्रीं क्लीं गन्धर्वदेव ऋषि नारद कौशिकात्रिव्यासांवरीष कलशोद्भव कश्यपाद्याः भक्त्यास्तुवन्ति निगमागम सूक्त मन्त्रैर्भिक्षां प्रदे० क्लीं श्रीं ह्रीं ऐं ॐ ॥ ४ ॥ ॐ ऐं ह्रीं श्रीं क्लीं लीलावचांसितव देवि ऋगादि वेदाः सृष्ट्यादि कर्म रचना भवदीय चेष्टा। त्वत्तेजसा जगदिदं प्रतिभाति नित्यं भिक्षांप्रदेहि गिरिजे क्षुधिताय मह्यम् क्लीं

श्रीं ह्रीं ऐं ॐ ॥ ५ ॥ ॐ ऐं ह्रीं श्रीं क्लीं शब्दात्मिके
शशिकलाभरणार्धदेहे शम्भोरुरस्थल निकेतन
नित्यं वासे । दारिद्र्यदुःखभय हारिणिकात्वदन्या
भिक्षां प्रदे० क्लीं श्रीं ह्रीं ऐं ॐ ॥ ६ ॥ ॐ ऐं ह्रीं श्री
क्लीं सन्ध्यात्रये सकल भूसुर सेव्यमाने स्वाहा
स्वधासि पितृदेव गणार्ति हन्त्री जायाः सुता
परिजना तिथयोऽन्न कामाः भिक्षां प्रदे० क्लीं श्रीं ह्री
ऐं ॐ ॥ ७ ॥ ॐ ऐं ह्रीं श्रीं क्लीं सद्भक्त कल्पलतिके
भुवनैकवन्द्ये भूतेशहृत्कमल मग्नकुचाग्रभृङ्गे कारुण्य
पूर्णनयने किमुपेक्षसे मां भिक्षां प्रदे० ॐ क्लीं श्री
ह्रीं ऐं ॐ ॥ ८ ॥ ॐ ऐं ह्रीं श्रीं क्लीं अम्बत्वदीय
चरणाम्बुज संश्रयेण ब्रह्मादयोऽप्यविकलां श्रियमा
श्रयन्ते तस्मादहं तवनतोस्मि पदारविन्दे भिक्षांप्रदे०
क्लीं श्रीं ह्रीं ऐं ॐ ॥ ९ ॥ ॐ ऐं ह्रीं श्रीं क्लीं एकाग्र
मूल निलयस्य महेश्वरस्य प्राणेश्वरि प्रणत भक्त
जनाय शीघ्रम् कामाक्षि रक्षित जगत्त्रितयेन्नपूर्णे

भिक्षांप्रदे हि गिरिजे क्षुधिताय मह्यम् क्लीं श्रीं ह्रीं ऐं ॐ ॥ १० ॥ ॐ ऐं ह्रीं श्रीं क्लीं भक्त्या पठन्ति गिरिजादशकं प्रभाते मोक्षार्थिनो बहुजनाः प्रथितोन्न कामाः प्रीतामहेश वनिताहिमशैल कन्या तेषां ददाति सुतरां मनसेप्सितानि क्लीं श्रीं ह्रीं ऐं ॐ ॥ ११ ॥

श्री शङ्कराचार्य विरचितं अन्नपूर्णा कवचं सम्पूर्णम् ।

श्री अन्नपूर्णा देव्यै नमः

# श्री अन्नपूर्णा स्तोत्रं प्रारम्भ्यते

मन्दार कल्प हरिचन्दन पारिजात मध्ये शशाङ्क मणिमण्डित वेदिसंस्थे । अर्धेन्दुमौलि सुललाट षडर्ध नेत्र भिक्षां प्रदेहि गिरिजे क्षुधिताय मह्यम् ॥ १ ॥ केयुरहार कटकाङ्गद कर्णपूर काञ्ची कलाप मणिकान्ति लसद्दुकूले दुग्धान्न पात्र वर काञ्चन दर्विहस्ते भिक्षां प्रदे० ॥२॥ आलीकदम्ब परिसेवित पार्श्वभागे शक्रादिभिर्मुकुलिताञ्जलिभिः पुरस्तात् । देवित्वदीय चरणौ शरणंप्रपद्येभिक्षां प्र० ॥ ३ ॥ गन्धर्व देव ऋषि नारद कौशिकात्री व्यासा-म्बरीष कलशोद्भव कश्यपाद्याः । भक्त्यास्तुवन्ति-निगमागमसूक्त मंत्रै भिक्षां प्र० ॥ ४ ॥ लीला वचांसितव देवि ऋगादि वेदाः सृष्ट्यादि कर्मरचना भवदीय चेष्टा त्वत्तेजसा जगदिदं प्रति भाति नित्यं भिक्षां प्र० ॥ ५ ॥ शब्दात्मिके शशिकलाभरणार्ध-

देहे शम्भोरुरस्थल निकेतन नित्यवासे दारिद्र्य दुःख भयहारिणिका त्वदन्याभिक्षां प्र० ॥ ६ ॥ सन्ध्या त्रये सकलभूसुर सेव्यमाने स्वाहास्वधासि पितृदेव गणार्तिहन्त्री । जायाः सुताः परिजनाति-थयोऽन्नकामाः भिक्षां प्र० ॥ ७ ॥ सद्भक्त कल्पलतिके भुवनैक वन्द्ये भूतेशहृत्कमल मग्न कुचाग्रभृंगे । कारुण्य पूर्णनयने किमुपेक्षसेमां भिक्षां प्र० ॥ ८ ॥ अम्बत्वदीय चरणाम्बुजसंश्रयेण ब्रह्मादयोऽप्य-विकलां श्रियमाश्रयन्ते । तस्मादहं तवनतोऽस्मि पदारविंन्दं भिक्षां प्र० ॥ ६ ॥ एकाग्रमूलनिलयस्य महेश्वरस्य प्राणेश्वरी प्रणत भक्त जनाय शीघ्रम् । कामाक्षि रक्षित जगत्त्रितयेऽन्नपूर्णे भिक्षां प्रदेहि गिरिजे क्षुधिताय मह्यम् ॥ १० ॥ भक्त्या पठन्ति-गिरिजा दशकं प्रभाते मोक्षार्थिनो वहुजनाः प्रथि-तोऽन्न कामाः । प्रीता महेश वनिताहिमशैल कन्या तेषांददाति सुतरां मनसेप्सितानि ॥११॥

इति श्रीशंकराचार्य्यविरचितं अन्नपूर्णा स्तोत्रं सम्पूर्णम् ।

# ❀ अन्नपूर्णाजी की ❀

( १ )

हौं कपूत निज पूत तिहारो अन्नपूर्ण माईरी।
तेरी कृपा कटाक्ष किये तें मेरी सब बन जाईरी॥
काशीपुरी सकल जगपावनि भूमि तें भिन्नं बनाईरी।
यमपुर जीव जान नहीं पावैं तहँ तेरी ठकुराईरी॥
भागीरथी और रवितनया सादर संग लिवाईरी।
तुव पुरकी प्रताप लखि जननी वास कियो तहँ आईरी॥
अणिमादिक सब अन्न मधुर लै करत फिरत पहुनाईरी।
सुरदुर्लभ सुख देत सबन को अंत मोक्षपद पाईरी॥
आनँद मगन सुमन सुर बरखैं बाजत गगन बधाईरी।
दस अरु चार भुवन चौधोंसे शोभा अति अधिकाईरी॥
दरसन से अघ दूर होत हैं कवि वरणत सकुचाईरी।
आप पियारे पास बसाये हमैं दियो बिसराईरी॥
गो द्विज दुखित देखि जब जमनी तब तुम करत सहाईरी।
भवसागर तारण को तरणीपुरी पुनीत बनाईरी॥
देवी सहाय असी वरुण बिच सो मत रह्यो समाईरी।
तेरे चरन कमल नख निरखत शोक समूह नसाईरी॥

---

* ॐ नमः शिवाय *

# शिव-भक्तों के लिये अमूल्य उपहार

सचित्र शिव-भक्तमाल, जिसमें ३० सुन्दर तिरंगे, व सादे चित्र सहित सम्पूर्ण ... ... ... मूल्य २)

## भक्ति-ग्रन्थ-माला की १३ अनूठी पुस्तकें

१ शिव-भक्तमाल पूर्वार्ध — शिवभक्तों की पावनी कथा पढ़कर अपने जीवन को पवित्र करें। ... ... मूल्य ॥)

२ उत्तरार्ध - मूल्य ... ... ... ... ॥)

३ द्वादशज्योतिर्लिङ्ग — इनके प्रकट होने की १२ सुन्दर कथा और उन स्थानों का पूरा पता। मूल्य ... ... ~)॥

४ शैवप्रमोद — अनेक राग-रागिनियों में समय-समय का सुन्दर भजन, शिवभक्त पं० चन्द्रशेखरजी शुक्लकृत, मूल्य ... ।)

५ शिवपूजाविधान — शिवपूजा माहात्म्य, भस्ममहिमा, रुद्राक्षलिंग पूजामीमांसा, शिवनिर्माल्यविचार इत्यादि मूल्य ... ।)

६ मातृपदाञ्जली — पं० ताराकुमारजीकृत, मूल्य .. ~)

७ काशीमोक्षनिर्णय — श्रीजगद्गुरु सुरेश्वराचार्यकृत पं० अम्बिकादत्तजी उपाध्याय एम० ए०, शास्त्रीकृत भाषा-टीका। मूल्य ... ।~)

८ शिवपञ्चामृत — महिमामृत, नामामृत, कीर्तनामृत, ध्यानामृत तथा अभयामृत सच्चे अमृत हैं। सचित्र, मूल्य ... ... ।)

९ शिवमहिम्न स्तोत्र — पदच्छेद-अन्वय-सहित, शिवकवच शिवसहस्रनाम सहित मूल्य ... ... ... ... ॥)

१० शिवकवच — भाषा-टीका मूल्य ... ... ... ~)॥

११ शिवसहस्रनाम — मूल्य ... ... ... ~)॥

१२ शिव-जप-माला — मूल्य ... ... ... ~)॥

१३ शिवाशिवललितावली — मूल्य ... ... ॥)

मिलने का पता—

**गौरीशंकर गनेड़ीवाला**

भक्ति-ग्रन्थमाला, छपरा, सारन।